MSS No. 163 Subject Literature

Name of MSS मेघदूत टीका, मल्लिनाथीय टीका तथा व्या० सहित

Author — —

Period — — Folios 13 (00a + 001 to 012)

Script Sanskrit Source Prithipal Singh, Amritsar

Missing Folios Incomplete

उ
मे-टी
१

ॐ स्वस्ति श्रीगणेशाय नमः ॐ नमः सरस्वत्यै मातापितृभ्यां जगतो नमो वामार्द्धजानये सद्योदक्षिणदृक्पातसंकुचद्वामदृष्टये १
अन्तरायतिमिरोपशान्तये शान्तपावनमचिन्त्यवैभवं तन्नरं वपुषि कुंजरं मुखे मन्महे किमपि तुन्दिलं महः २ शरणं करवाणि
शर्मदं ते चरणौ वाणि चराचरोपजीव्यौ करुणामसृणैः कटाक्षपातैः कुरु मामम्ब कृतार्थसार्थवाहं ३ इहान्वयमुखेनैव सर्वं
व्याख्यायते मया नामूलं लिष्यते किंचिन्नानपेक्षितमुच्यते ४ आशीर्नमस्क्रिया वस्तुनिर्देशो वापि तन्मुखमिति शास्त्रात्
काव्यादौ वस्तुनिर्देशात्कथां प्रस्तौति कश्चिदिति स्वाधिकारात्स्वनियोगात्प्रमत्तोऽनवहितः प्रमादोनवधानतेत्यमरः जुगु
प्साविरामप्रमादार्थानामुपसंख्यानमित्यपादानत्वेन तस्मात्पंचमी अत एवापराधाद्धेतोः कान्ताविरहेण गुरुणा दुर्भरेण दुस्तरे
णेत्यर्थः गुरुस्तु गीष्पतौ श्रेष्ठे गुरौ पितरि दुर्भरे इति विश्वः वर्षभोग्येन संवत्सरभोग्येन कालाध्वनोरत्यंतसंयोगे द्वितीया
अत्यंतसंयोगे चेति समासः अस्तमिति चेति णत्वं भर्त्तुः स्वामिनः शापेनास्तंगमितो महिमा सामर्थ्यं यस्य सोस्तंगमितमहिमा अस्त

ॐ कश्चित्कान्ताविरहगुरुणा स्वाधिकारप्रमत्तः शापेनास्तंगमितमहिमा वर्षभोग्येन भर्त्तुः यक्ष।
श्चक्रे जनकतनयास्नानपुण्योदकेषु स्निग्धच्छायातरुषु वसतिं रामगिर्याश्रमेषु १ ॥ ॥

मितिमकारान्तमव्ययं तस्य द्वितीयेति योगविभागात्समासः कश्चिदनिर्दिष्टनामा यक्षो देवयोनिविशेषः विद्याधराप्सरोय
क्षरक्षोगन्धर्वकिन्नराः पिशाचो गुह्यकः सिद्धो भूतोमी देवयोनयः इत्यमरः जनकतनयायाः स्नानैरवगाहनैः पुण्यानि पवित्रा
णि उदकानि येषु तेषु पावनेष्वित्यर्थः छायाप्रधानास्तरवश्छायातरवः शाकपार्थिवादित्वात्समासः स्निग्धाः सा
न्द्राश्छायातरवो नमेरुवृक्षा येषु तेषु वसतियोग्येष्वित्यर्थः स्निग्धं तु मसृणे सान्द्रे छायावृक्षो नमेरुः स्यादिति च शाश्व
तो वैरामगिरेश्चित्रकूटस्याश्रमेषु वसतिं वहिवसतिभ्यश्चेत्यौणादिकोतिप्रत्ययः चक्रे कृतवान् अत्र रसो विप्रलम्भ
श्रृंगारः तत्राशुन्मादावस्थाश्रित एवैकत्रानवस्थानेन सूचितः आश्रमेष्विति बहुवचनेन सीताप्रति राम
स्मरणमस्संदेशे मनसि निधाय मेघसंदेशं कविः कृतवानित्याहुः अत्र काव्ये सर्वत्र मन्दाक्रान्तावृत्तं ॥ १ ॥

१

तस्मिन्निति तस्मिन्नद्रौ चित्रकूटाद्रौ अबलाविप्रयुक्तः कान्ताविरहितः कनकस्य वलयः कटकं वलयोऽस्त्रियामित्यमरः तस्य भ्रंशेन पातेन रिक्तः शून्यः प्रकोष्ठः कूर्परादधः प्रदेशो यस्य स तथोक्तः कक्षान्तरे प्रकोष्ठः स्यात्कूर्परादध। इति शाश्वतः विरहदुःखात्कृशाङ्ग इत्यर्थः कामी कामुकः कतिचिन्मासानष्टौ मासानित्यर्थः मासानन्यान्गमय। चतुर इति वक्ष्यमाणत्वात् नीत्वा यापयित्वा आषाढानक्षत्रेण युक्ता पौर्णमासी आषाढी नक्षत्रेण युक्तः कालइ

तस्मिन्नद्रौ कतिचिदबलाविप्रयुक्तः स कामी
नीत्वा मासान्कनकवलयभ्रंशरिक्तः प्रकोष्ठः

त्यण् टिड्ढाणञित्यदिनाङीप् सास्मिन् पौर्णमासीत्याषाढो मासः सास्मिन्पौर्णमासीति संज्ञायामित्यण् तस्य प्रथम दिवसे श्लिष्टसानुमाक्रान्तकूटं वप्रक्रीडा उत्खातकेलयः उत्खातकेलिः क्रीडाद्यैर्वप्रक्रीडा निगद्यते इति शब्दार्णवः। तत्र परिणतस्तिर्यक्कृतदन्तप्रहारः तिर्यग्दन्तप्रहारस्तु गजः परिणतो मत इति हलायुधः स चासौ गजश्च स इ।
वप्रेक्षणीयं दर्शनीयं मेघं ददर्श

मे. टी.
२

गजप्रेक्षणीयमित्यत्रैव लोयाल्लिङ्गोपमा केचिदाषाढस्य प्रथमदिवस इत्यत्र प्रत्यासन्नेन नभसीति वक्ष्यमाणेन नभोमासस्य प्रत्या-
सन्नमात्रस्य प्रथमदिवस इति पाठं कल्पयन्ति तदसंगतं प्रथमातिरेके कारणाभावात् नभोमासस्य प्रत्यासत्त्यर्थमि-
त्युक्तमिति चेन्न प्रत्यासत्तिमात्रस्य मासप्रत्यासत्त्यैव प्रथमदिवसस्याप्युपपत्तेः अत्यन्तप्रत्यासत्तेरुपयोगिभावेना-
विवक्षितत्वात् विवक्षितत्वे वा स्वपक्षेपि प्रथमदिवसोत्तिकत्तेण मेघदर्शनकल्पनायाः प्रमाणाभावेन तदसं-
भवात् प्रस्तुतस्य यक्षेरावकुशलसंदेशस्य भावनर्थे प्रतीकारार्थस्य तु रत एवानुमानसमुक्ते भवतीत्युपयोगः

आषाढस्य प्रथमदिवसे मेघमाश्लिष्टसानुं
वप्रक्रीडापरिणतगजप्रेक्षणीयं ददर्श २

स्थितः ननून्मत्तस्य नायं विवेक इति चेन्न उन्मत्तस्यानर्थस्य प्रतीकारार्थं प्रवृत्तिरपीति संदेश एव मा भूत् तथा च का-
व्यारंभ एवाप्रसिद्धाः स्यादित्यहो मूलच्छेदीयाऽतिप्रकर्षः कथं तर्हि शापान्तो मे भुजगशयनादुत्थिते शा-
र्ङ्गपाणावित्यादिना भवन्त्र वा यावार्षिकस्य शापस्य माचतुष्टयावशिष्टस्योक्तिः दशदिवसाधिके इ-
ति चोक्त पक्षेऽपि कथं मा विंशतिदिवसैर्न्यूनत्वादिति संतोष्टव्यं तस्मादीषच्छेषमन्यममविवक्षितम-
मिति स्फुटं प्रथमदिवस इति २ ॥

तस्येति राज्ञानेयत्ता: राज्ञाप्रभौन्टपे चंद्रे पत्ते त्तवियशक्रयोरितिविश्वः राज्ञांराजाराजराजःकुवेरः राजराजोथ
नाधिप इत्यमरः राज्ञाहः सखिभ्यष्टच्तस्यानुचरोपत्तः अन्तर्वाष्पाथीरोदारत्वात्तः स्तंभितास्रुः सन्कौतुका।
यानहेतोरभिलाषोत्पादकारणस्य कौतुकंचाभिलाषेस्यादुत्सवेनर्महर्षयोरितिविश्वः तस्यमेघस्याग्रेका।
थमपिगरीयसाप्रयत्नेनेत्यर्थः ज्ञानेहेतुविवक्षायामप्यादिकथमव्ययं कथमादितथाप्यंतंयत्नगौरवा।
वाढयोरितिउज्वलः स्थित्वाचिरंदध्यौचिंतयामास ध्येचिंतायामितिधातोर्लिट् मनोविकारोपशा।

तस्यस्थित्वाकथमपिपुरः कौतुकाधानहेतोरंतर्वाष्पश्चिरमनुचरोराजराज
स्यदध्यौ मेघालोकेभवतिसुखिनोप्यन्यथावृत्तिचेतः कंठाश्लेषप्रणयिनिजनेकिंपु
नर्दूरसंस्थे २

यपर्यंतमितिशेषः विकारहेतुमाह तथाहि मेघालोके मेघदर्शनेसतिसुखिनोपिप्रियादिजनसंगस्या
पिचेतः चित्तमन्यथाभूतावृत्तिर्व्यापारोयस्यतदन्यथावृत्तिभवतिविकृतिमापद्यतइत्यर्थः कंठाश्लेषप्र
णयिनिकंठालिंगनार्थिनिजनेदूरेसंस्थास्थितिर्यस्यतस्मिन्दूरसंस्थेसतिकिंपुनर्विरहिणः किमुत
वक्तव्यमितिभावः विरहिणांमेघसंदर्शणमुद्दीपनंभवतीतिभावः अर्थांतरन्यासोलंकारस्तदुक्तंद।

ङेनाज्ञेयः सोर्थांतरन्यासो वक्तप्रस्तुतचिंतनेनतन्मा
यनसमर्थस्यान्यासो योन्यवस्तुनइति ३

मे. टी.
३

प्रथमसमाहितान्तःकरणः सन्किंकृतवानित्यत आह प्रत्यासन्न इति मयन्तोमयच्छिन्नेरंदयोः सदृशत्यर्थः नभसि श्रावणे नभः स्व श्रावणो नभस्वित्यमरः प्रत्यासन्ने आषाढस्यानंतरं सन्निकृष्टे सतीत्यर्थः दयिताजीवितालंवनार्थी मन्नवषोकालस्य विरहदुःखजनकत्वादुत्पन्न प्रतीकाराद्नायाद्नयोर्जीवितप्रतिबंधएव करमिति सा येन प्रागेवप्रियाप्राणधारणो पायं विकीर्षुरित्यर्थः जीवनस्योदकस्य मूलः पदवंधो वस्त्रवंधो जीमूतः पृषोदरादित्वात्साधुरिति मूतः स्या त्पटवंधेपयोतिरुद्रः तेन जीमूतेन जलधरेण प्रयोज्येन स्वकुशलमयीं स्वक्षेमप्रधानां प्रवृत्तिं वार्त्तां वार्त्ता प्र वृत्ति वृत्तान्त इत्यमरः हारयिष्यन्प्रापयिष्यन् लृट्शेषे चेति चकारात्क्रियार्थक्रियोपपदाल्लृट्प्रत्ययः जीवना र्थकर्मजीवनपदेनैव कर्तव्यमिति भावः हृक्रोरन्यतरस्यामिति कर्मसंज्ञाया विकल्पात्पक्षे कर्तरि तृतीया

प्रत्यासन्ने नभसि दयिताजीवितालंवनार्थी जीमूतेन स्वकुशलमयीं हारयिष्यन्प्रवृत्तिं।
स प्रत्यग्रैः कुटजकुसुमैः कल्पितार्घाय तस्मै प्रीतः प्रीतिप्रमुखवचनं स्वागतं व्याजहार ४

प्रत्यग्रैरभिनवैः कुटजकुसुमैर्गिरिमल्लिकाभिः कुटजो गिरिमल्लिकेति हलायुधः कल्पितार्घाय कल्पितो दत्तोऽ र्घः पूजाविधिर्यस्मै तस्मै मूल्ये पूजाविधावर्घ इत्यमरः तस्मै जीमूताय क्रियाग्रहणमपि कर्तव्यमिति संप्रदानत्वाच्च तुर्थी प्रीतिप्रमुखवानि प्रीतिपूर्वकाणि वचनानि यस्मिन्कर्मणि तत् प्रीतिप्रमुखवचनं यथा तथा शोभनमागतं स्वाग तं स्वागतवचनं प्रीतः सन्व्याजहार कुशलागमनं पप्रच्छेत्यर्थः नाथनन्त्वनयत्र प्रत्यासन्ने नभसीति समाधानेन प्रत्या सन्ने नभसीति साधीयान्पाठः कल्पितः प्रत्यासन्ने प्रकृतिमापन्ने सतीत्यर्थः वस्तुतस्त्वनेवरूपे पाठविरोधः कल्पि तः स प्रदर्शितोऽस्माभिराषाढस्य प्रथमदिवसइत्येतस्य पाठविकल्पसमाधानेनैव समाधायि ॥ ४ ॥ ३

नन्वचेतनसाध्यमर्थं कथमचेतनेन कारयितुं प्रवृत्त इत्यपेक्षायां कविः समाधत्ते धूमेति। धूमश्च ज्योतिश्च सलिलं च मरुतश्च
धूमज्योतिःसलिलमरुतः तेषां सन्निपातः संघातो मेघः क्वाचेतनत्वात्संदेशानर्ह इत्यर्थः। पटुकरणैः समर्थेन्द्रियैः करणं साधकतमं क्षेत्र
गात्रेन्द्रियेषु च इत्यमरः। प्राणिभिश्चेतनैः प्राणी तु चेतनो जन्मी इत्यमरः। प्रापणीयाः प्रापयितव्याः संदि
श्यन्त इति संदेशास्त एवार्थाः क्व इत्येवमौत्सुक्यादिष्टार्थोद्युक्तत्वात् इष्टार्थोद्युक्त उत्सुक इत्यमरः। संप्रदानत्वात्तु।

धूमज्योतिःसलिलमरुतां सन्निपातः क्व मेघः संदेशार्थाः क्व पटुकरणैः प्राणिभिः प्रापणीया
इत्यौत्सुक्यादपरिगणयन्गुह्यकस्तं ययाचे कामार्ता हि प्रकृतिकृपणाश्चेतनाचेतनेषु ५

९१९ लप्रश्नेनाभिमुखीचकारेत्यर्थः। अपरिगणयन्नविचारयन् गुह्यको यक्षस्तं मेघं प्रयाचे याचितवान्। याच्ञायां तथा हि कामार्ताः मद
नातुराश्चेतनाश्चाचेतनाश्च तेषु विषये प्रकृतिकृपणाः स्वभावदीनाः कामान्धानां युक्तायुक्तविवेकशून्यत्वादचेतनयाच्ञा न विरु
ध्यत इत्यर्थः। अत्र मेघसंदेशयोर्विरूपघटनाद्विषमालंकारः। तदुक्तम् विरुद्धकार्यस्योत्पत्तिर्यत्रानर्थस्य वा भवेत् वि
रूपघटना चासौ विषमालंकृतिः स्त्रियां सा चार्थान्तरन्यासानुप्राणिता तत्समर्थकत्वेनैव चतुर्थपादे तस्योपन्यासात् ५॥

संप्रतियांचाप्रकारमाह जातमिति हेमेघत्वांभुवनेषुविदितेभुवनविदितेनिष्ठेतिभूतार्थेक्तः गतिबुद्धीत्यादिवर्त्तमानार्थेत्वे
पिक्तस्यचवर्त्तमानइतिभुवनशब्दस्यषष्ठ्यंततानिषिद्धमानसमासोनस्यात्क्तेनचपूजायामितिनिषेधात् पुष्करावर्त्तका
श्चकेचिन्मेघानांश्रेष्ठास्तेषांवंशेजातंमहाकुलप्रसूतमित्यर्थः कामरूपमिच्छाधीनविग्रहंदुर्गादिसंचारत्वमित्य
र्थः मघोनइंद्रस्यप्रकृतिपुरुषंप्रधानपुरुषंजानामि तेनत्वत्प्रभुत्वादिज्ञानामीत्यादिगुणयोगित्वेनहेतुनाविधि
वशाद्दैवायत्तत्वात् विधिर्विधानेदैवेचेत्यमरः वशमायत्तेवशीमिच्छाप्रभेदयोरितिविश्वः दूरेबंधुर्यस्यसदूरबंधुः

जातंवंशेभुवनविदितेपुष्करावर्त्तकानांजानामित्वांप्रकृतिपुरुषंकामरूपंमघोनः तेनार्थि
त्वंत्वयिविधिवशाद्दूरबंधुर्गतोऽहंयाञ्चामोघावरमधिगुणेनाधमेलब्धकामा ॥ ६

वियुक्तभार्योहंत्वय्यर्थित्वंगतः याचकस्ययाञ्चागुणोत्कर्षेऽत्रोपयुज्यतइत्याशंक्यदैवायाञ्चाभंगेऽपिलाघवदोषाभावप्र
त्वेवायययोगइत्याह याञ्चेतितथाहि अधिगुणोऽधिकगुणेपुंसिविषये याञ्चामोघानिःफलापिवरमीषत्प्रिया
दातृगुणश्लाघ्यत्वाद्याचितृपदंपांचविफलादीषत्प्रियत्वमितिभावः अधमेनिर्गुणेयाञ्चालब्धकामापिनवर
मीषत्प्रियमपिनभवतीत्यर्थः दैवाहृतेवरःश्रेष्ठेत्रिषुक्लीवंमनाक्प्रियमित्यमरः अर्थांतरन्यासानुप्राणितः
प्रेयोलंकारः तदुक्तंदंडिनाप्रियःप्रियतराख्यानमितिप्रतदाद्येपादत्रयेचतुर्थपादेनार्थांतरन्यासेनोपजीवितमि ४

संतप्तानामितिहेपयोदत्वंसंतप्तानांआतपेनवाप्रवासविरहेणवासंज्वरितानां संतापः संसंज्वरसमौवित्यमरः शरणं
पयोदानेनातपविज्ञानांप्रोषितानांस्वस्थानप्रेरणायाचरक्षकोसिशरणंगृहरक्षित्रोरित्यमरः तत्तस्मात्कारणाद्धने
पतिकुवेरस्यक्रोधेनविश्लेषितस्यप्रियायावियोजितस्यमेममसंदेशंवार्त्ताप्रियायाः हरप्रियांप्रतिनयेत्यर्थः संवंध
सामान्येषष्ठीसंदेशहरणेनावयोःसंतापंतुदेत्यर्थः अत्रस्थानेसास्थितातत्स्थानेकिंकस्यकावार्त्तातत्राह गंतव्या

संतप्तानांत्वमसिशरणंतत्पयोदप्रियायासंदेशंमेहरधनपतिक्रोधविश्लेषितस्य गंतव्या
तेवसतिरलकानामयक्षेश्वराणांवाह्योद्यानस्थितहरशिरश्चंद्रिकाधौतहर्म्या ७

ति वहिर्भवंवाह्यं वहिर्द्वंवपंचजनेभ्यश्चेत्यएवाह्ये उद्यानेस्थितस्यहरस्यशिरसियाचंद्रिकातयाधौतानि ।
निर्मलानिहर्म्याणियत्निकभवनानियस्यांसातथोक्ता हर्म्यादिधनिनांवासइत्यमरः अनेनव्याव
र्तकमुक्तं अलकानामालकेतिप्रसिद्धायक्षेश्वराणांवसतिः स्थानंतेतवगंतव्यात्वयागंतव्येत्यर्थः ।
कृत्यानांकर्त्तरिषष्ठी ॥७॥

मे-टी. ५ मदर्थे प्रवृत्तस्य ते पथिकांगनाजनाश्वासनमानुषंगिकं फलमाह त्वामिति पवनपदवीमाकाशमारूढं त्वां पंथानं गच्छं
तीति पथिकाः पथः कन्निति कन् प्रत्ययः तेषां वनिताः प्रोषितभर्तृकाः प्रत्ययात् प्रियागमनविश्वासात् प्रत्ययोऽधी
नशपथज्ञानविश्वासहेतुष्वित्यमरः आश्वसंत्यो विश्वसिताः श्वसिधातोः शत्रंतान्ङीप् तथोद्गृही।

त्वामारूढं पवनपदवीमुद्गृहीतालकांताः
प्रेक्षिष्यंते पथिकवनिताः प्रत्ययादाश्वसंत्यः
कः सन्नद्धे विरहविधुरां त्वय्युपेक्षेत जायां
न स्यादन्योऽप्यहमिव जनो यः पराधीनवृत्तिः ८

तालकांताः दृष्टेः प्रसादार्थमुन्नमय्योद्धृतालकाग्राः सत्यः प्रेक्षिष्यंते अत्युत्कंठतयाद्रक्ष्यंतीत्यर्थः तथाहि त्वयि
सन्नद्धे व्यापृते सति विरहेण विधुरां विवशां जायां क उपेक्षेत न कोऽपीत्यर्थः अन्योऽपि मद्व्यतिरिक्तोऽपि यो जनो
ऽहमिव पराधीनवृत्तिः पराधीनजीविको न स्यात् स्वतंत्रस्तु न कोऽप्युपेक्षेतेति भावः इत्यर्थांतरन्यासः ८ ५

निमित्तान्यपितेषुमान्निदर्शयंस्तत्राह मंदमंदमिति अनुकूलः यँनोवायुस्त्वां मंदमंदंनुदति मंदमित्यर्थः अत्रकथंचिद्वीप्सा
यामेवद्विरुक्तिर्निर्वीप्साप्रकारेगुणवचनस्येत्यनेनद्वित्वेप्रयोगात्तत्रकर्मधारयवद्भावेसुप्लुकि मंदमंदमिति स्यात्।
तदेवाहवामनः मंदमंदमित्यत्राप्रकारार्थेद्विर्भावइति सथासदृशोभाविफलोदयरूपमित्यर्थः यथासाहचर्य।
योगरूपत्ववीप्सास्वार्थानतिक्रमइतियादवः नुदतिप्रेरयति अयंसगंधः सगर्वः संबद्धइतिकश्चित् गंधोगंधकआ
मोदेलेषसंबंधगंधयोरित्युभयत्रापीतिविश्वः तेनचवामोवामभागस्थः वामस्तुवक्रेरम्येस्यात्सव्येवामोगे
पिचेतिशब्दार्णवेचातकः पक्षिविशेषस्तुमधुरंश्राव्यंनदतिव्याहरति इदंनिमित्तद्वयंवक्ष्यमाणे वर्त्तिष्यतेचापरं।

मंदंमंदंनुदतिपवनश्चानुकूलोयथात्वांवामश्चायंनदतिमधुरंचातकस्तेसगर्वः गर्भाधा
नक्षणपरिचयान्नूनमाबद्धमालासेविष्यंतेनयनसुभगंखेभवंतंबलाकाः ॥ ९॥

२

निमित्तांतरमाहगर्भेतिगर्भः कुक्षिस्थोजंतुः गर्भोपवरकेह्यग्नौसुखेयनुसकंठकेकुक्षौकुक्षिस्थजंतौचेतियादवः
तस्याधानमुत्पादनंतदेवक्षणमुत्सवः क्षणोत्सवेहेतुत्वादितिभावः निर्व्यापारस्थितौकालविशेषोत्सवयोःक्षणः
इत्यमरः तस्मिन्परिचयादभ्यासाद्धेतोः खेव्योम्नि आबद्धमालागर्भाधानसुखार्थंत्वत्समीपेबद्धपंक्तयइत्यर्थः
बकेचकरणोदयेगर्भंबलाकादधते अयोगाद्वाकेवलावलयः समंनादितिबलाकाबलाकागगनान्नयनसु
भगंदृष्टिप्रियंभवंतंनूनंसत्यंसेविष्यंते अनुकूलमारुतचातकशब्दितबलाकादर्शनानांशुभसूचक

मे० टी
६

नचतस्यानाशाद्व्रतस्खलनाद्वानिरर्थकस्त्वत्प्रयासइत्याह तांचेति हेमेघ दिवसानामवशिष्टदिनानां कुवेरशापा
दुरवशितदिनानां गणनायां संख्याने तत्परामासक्तां तत्परे प्रसितासक्ताविति अमरः अतएवाव्यापन्नाममृतां शा
पावसानेमदागमनप्रत्याशयाजीवंतीमित्यर्थः एकः पतिर्यस्याः सा एकपत्नी तां पतिव्रतामित्यर्थः निःसपा
त्न्यादिष्विति ङीप्नकारश्च भ्रातृर्मेजायां मातृस्वविन्नः शोकेदर्शनीयामित्याशयः तां मत्प्रियामविहतगतिरविच्छि

तांचावश्यंदिवसगणनातत्परामेकपत्नीमव्यापन्नामविहतगति
र्द्रक्ष्यसिभ्रातृजायां आशाबंधः कुसुमसदृशंप्रायशोह्यंग
नानांसद्यःपातिप्रणयिहृदयंविप्रयोगेरुणद्धि ॥ १० ॥

न्नगतिः सन्नवश्यंद्रक्ष्यसि आलोकयिष्यसे तथाहि आशा अतिरभसा आशादिगतितृष्णयोरिति यादवः बध्य
तेनेनेति बंधनं वृंतमिति यावत् आशैव बंधः आशाबंधः कर्ता प्रणयि प्रेमयुक्तं अतएव कुसुमसदृशं कुसुमा
रमित्यर्थः अतएव वियोगे विरहे सद्यः पाति सद्योध्वंसनशीलम् अंगनानां हृदयं जीविते चित्तेर्वा तस्याकृत
तयोरिति शाश्वतः हि प्रायशः प्रायेण रुणद्धि प्रतिबध्नातीत्यर्थान्तरन्यासः १० ६

संप्रति सहायसंपत्तिश्चास्तीत्याह कर्तुमिति यद्गर्जितं कर्तृ महीमुच्छिलीन्ध्रामुद्भूतकंदलिकां तदल्पां च शिलीन्ध्रः स्या दिति शब्दार्णवे अतएवावंध्यां सफलां कर्तुं प्रभवति शक्नोति शिलीन्ध्राणां भवितव्यस्य संपत्तिसूचकत्वादिति भावः तज्जं निमित्तेन निदानकालाश्रययोगाद्रुदिता शिलीन्ध्रा संपन्नस्यां कथयतीत्याचीतितितच्छ्रुत्वा श्रवणसुभगं श्रोत्रसुखं लोकस्येति शेषः ते तव गर्जितं श्रुत्वा मानसोत्काः मानसे सरसि उत्कमनसः उत्सुककाः इति यावत् उत्सुकाउन्मना।

कर्तुं यच्च प्रभवति महीमुच्छिलीन्ध्रामवंध्यां तच्छ्रुत्वा ते श्रवणसुभगं गर्जितं मानसोत्काः
आकैलाशाद्बिसकिसलयच्छेदपाथेयवन्तः संपत्स्यंते नभसि भवतो राजहंसाः सहा।
याः ११

इति निपातनात्साधुः कालांतरे मानसस्य हिमदुष्टत्वाद्धिमस्य च हंसानां रोगहेतुत्वाद्न्यत्रगता हंसाः पुनर्वर्षासु मानससमीपं गच्छंतीति प्रसिद्धं बिसकिशलयानां मृणालाग्राणां छेदैः सकलैः पाथेयवन्तः पथि साधु पाथेयं पाथिभ्यो हितं पथ्यातिथ्यवसतिस्वपतेर्ढञ् तद्वंतः मृणालाग्रसकलवंतः पथ्यैः राजहंसाः हंसविशेषाश्च राजहंसास्तु चंचुचरणैर्लोहितैः सितच्छदा इत्यमरः नभसि व्योम्नि भवतस्तवा कैलासपर्यंतं पदद्वयं चेतत् सहायाः स पात्राः सहायस्तु सपात्रः स्यादिति शब्दार्णवे ते संपत्स्यंते संभविष्यंते ११ ॥

मे. टी.

आपृछस्वेतिप्रियंसखायोऽप्रियःसखंराजाहः सखिभ्यःप्रवृत्तिनिरिच्छमासांतः तुंगमुन्नतं पुंसां वंद्यैः हरिराराधनी।
येरघुपतिपदैःरामपादन्यासैर्मेखलासु कटकेषु अयथं मेखलाः श्रोणिस्थानेंद्रियकटकेकटिवंधे भवव्यं यत्नेऽ।
तियादवः अंकितं चिन्हितं इदृश्यं सखित्वात्पवित्रत्वाच्च संभावनार्हं मंघं शैलं चित्रकूटाद्रिमालिंग्यापृच्छस्व सा
धीयामीमंत्रणेनसंभावने आपृच्छस्वनिमित्तमित्यर्थः आङि उपृच्छ्योरित्यात्मनेपदं सखित्वंनिर्वहति।

आपृछस्वप्रियसखममुंतुंगमालिंग्यशैलं
वंद्यैःपुंसांरघुपतिपदैरंकितंमेखलासु ।
कालेकालेभवतिभवतोयस्यसंयोगमेत्य
स्नेहव्यक्तिश्चिरविरहजंमुंचतोवाष्पमुष्णं १२

कालेकालेप्रतिप्रावृट्कालेस्नेहस्यसमागमनकालस्यकालपाठेनोच्यतेवीप्सायां द्विरुक्तिः भवतः संयोगं संपर्कमे
त्य चिरविरहजंतमुष्णं वाष्पमूष्माणं नेत्रजलं च वाष्पोनेत्रजलोष्मणोरितिविश्वः मुंचतो यस्य शैलस्य स्नेह
व्यक्तिः प्रेमाविर्भावो भवति प्रयानं हि विरहमंगतानां वाष्पपातो भवतीति भावः १२ ॥

संप्रतितस्यमार्गंकथयति मार्गमिति हेजलदतावदादौकथयतोमत्तइतिशेषः त्वत्प्रयाणस्यानुरूपमनुकूलंमार्गमध्वा
नं मार्गोम्रगपदेमासिसौम्यर्क्षेऽन्वेषणेध्वनिइतियादवः श्रृणुतदनुमार्गश्रवणानंतरंश्रोत्राभ्यांपेयंपानार्हमति
त्सलयोःश्रोतव्यमित्यर्थः पेयग्रहणात्संदेशस्यामृतसाम्यंगम्यते मेसंदेशोवाचिकंसंदेशवाग्वाचिकंस्यादित्यम
रः श्रोष्यसियत्रमार्गेखिन्नःखिन्नोभीक्ष्णंक्षीणबलःसन्नित्यवीप्सयोरितिनित्यार्थेद्विर्भावः शिखरिषुपर्व

मार्गंतावच्छृणुकथयतस्त्वत्प्रयाणानुकूलं
संदेशंमेतदनुजलदश्रोष्यसिश्रोत्रपेयम्
खिन्नःखिन्नःशिखरिषुपदंन्यस्यगंतासियत्र
क्षीणःक्षीणःपरिलघुपयःस्रोतसांचोपभुज्य १३

तेषुपदंन्यस्यनिःक्षिप्यपुनर्नवबललाभार्थंक्वहिप्येत्यर्थः क्षीणःक्षीणोऽभीक्ष्णंकृशीभूतःसन्अत्रापिपूर्ववदंनतत्वात्स्व
विविहितक्रिःश्रोतसांपरिलघुपयोयेणहल्वदोषरहितमुपलास्फालनखेदितत्वात्पथ्यमितिभावः तथाचवा
ग्भटः उपलास्फालनाक्षेपविच्छेदैःखेदितोदकाःहिमवन्मलयोद्भूतापथ्यास्तेवाभवंत्यमूरिति पयःपानी
यमुपभुज्यशरीरपोषणार्थमभ्यवहृत्यसंगतासिगमिष्यसि गमेर्लुट् ॥ १३ ॥

मे॰ टी॰
८

अद्रेरिति पवनेद्विषिरद्रेरिव कूटस्य शृंगं हरति किंस्वित् किंस्विच्छब्दो विकल्पवितर्कार्थः दिवादिषु पठितः इति शंकया उन्मुखीभिरुन्नतमुखी
भिः स्वांगनाचोपसर्जनादसंयोगोपधादिति ङीप् मुग्धाभिर्मूढाभिः मुग्धः सुंदरमूढयोरित्यमरः सिद्धानां देवयोनिविशेषाणामंगनादि
भिः चकितचकितं चकितप्रकारं यथा तथा प्रकारे गुणवचनस्येति द्विर्भावः दृष्टोत्साहः दृष्टो योगः सत्वरसा आर्द्राः निचुलाः
स्थलवेतसा यस्मिन्नस्मात् वानीरे कविमे देशस्थानिचुलः स्थलवेतसेऽपि इति शब्दार्णवे अस्मात्स्थानादाश्रमात्पथि नभोमार्गे दिग्नागा
नां दिग्गजानां स्थूला ये हस्ताः कराः तेषामवलेपान् तान्परिहरन् हस्तेनाभ्यवहरणे देशात्कारे भकरयोरपीति विश्वः अवलेपस्तु

अद्रेः शृंगं हरति पवनः किंस्विदित्युन्मुखीभिर्दृष्टोत्साहश्चकितचकि
तं मुग्धसिद्धांगनाभिः स्थानादस्मात्सरसनिचुलादुत्पतोदङ्मु
खः खं दिग्नागानां पथि परिहरन्स्थूलहस्तावलेपान् ॥ १४ ॥

गर्वे स्यात्क्षेपणे दूषणेऽपि चेति विश्वः उदङ्मुखः सन् अलकाया उदीच्यत्वादिति भावः एवमाकाशं प्राप्तत उत्पत अत्रेदमपि अर्थो
न्तरं ध्वनयति रसिको निचुलो नाम महाकविः कालिदासस्य सहाध्यायी परापादितानां कालिदासप्रबंधदूषणानां परि
हर्ता यस्मिन्स्थाने तस्मात्स्थानादुदङ्मुखो निर्दोषत्वादुन्नतमुखः सन् अवलेहरतीति हेतनासिद्धे महाकविभिर्गुणाश्च दृष्टोत्सा
हः सन्नवमुत्पत उच्चैर्भव स्वयमात्मानेवा प्रतिकविकल्किरिति संसर्गतो दोषगुणाभवंतीति चेन्मृषा येन तु जलाशये
पि स्थित्वा निकूलानि चुलनिचुलेतमात्मानं आरक्षतसिंधुवेगादिसादितत् श्लोकनिर्माणान्तस्मात्कविर्निचुले चेत्याह १४ ८

रत्नेति रत्नछायानां पद्मरागादीनां मणिप्रभाणां व्यतिकरो मिश्रणमिव प्रेक्षं दर्शनीयमाखंडलस्येंद्रस्य धनुः खंडमेतदिति
वक्ष्यनिर्देशो विवक्षितः पुरस्तादग्रे वल्मीकाग्राद्वामलूरविवरात् वामलूरश्च नाकुश्च वल्मीकेपुनपुंसकमित्यमरः

रत्नछायाव्यतिकर इव प्रेक्ष्यमे
तत्पुरस्ताद्वल्मीकाग्रात्प्रभवति
धनुः खंडमाखंडलस्य ये
न श्यामं वपुरतितरां कांतिं।
मापत्स्यते ते बर्हेणेव स्फुरित
रुचिना गोपवेषस्य विष्णोः १५

प्रभवति आविर्भवति येन धनुःखंडेन ते तव श्यामं वपुः स्फुरितरुचिना उज्वलकांतिना बर्हेण पिछेन पिछं बर्हेनपुंसः
कमित्यमरः गोपवेषस्य विष्णोर्गोपालस्य कृष्णस्य श्यामं वपुरिवातितरां कांतिं शोभामापत्स्यते प्राप्स्यते ॥ १५॥

मे-टी- त्वय्यीति कृषेर्हलकर्मणः फलं सस्यं त्वयि अधिकरणविवक्षायां सप्तमी आयत्तमधीनं अधीनो निघ्न आयत्तः इत्यमरः अवी
९ हेतोः प्रीत्या स्निग्धैरकृत्रिमप्रेमार्द्रैरित्यर्थः भ्रूविकाराणां भ्रूविलासानामनभिज्ञैर्ग्रामत्वादिति शेषः जनपदवधूटि
नां पल्लीयोषितां लोचनैः पीयमानः सन् सादरं वीक्ष्यमाणः मालं माला क्षेत्रं शैलप्रायमुन्नतस्थलं मालमुन्नतभूत
मित्युपलक्षणं सद्यस्तत्कालमेव सीरैर्हलैः कर्षणेन सुरभिघ्राणतर्पणं यथा तथा आरुह्य तत्राभिवृष्येत्यर्थः सुर

त्वय्यायत्तं कृषिफलमिति भ्रूविलासानभिज्ञैः
प्रीतिस्निग्धैर्जनपदवधूलोचनैः पीयमानः
सद्यः सीरोत्कषणसुरभिक्षेत्रमारुह्य मालं
किंचित्पश्चाद्व्रज लघुगतिर्भूय एवोत्तरेण १६

भिर्घ्राणतर्पणः इत्यमरः किंचित्पश्चाद्व्रज गच्छ लघुगतिस्तत्र निर्वृष्टत्वाल्लघुगमनः सन् लघुक्षिप्रमरं द्रुतमित्य
मरः भूयः पुनरपि उत्तरेणैव उत्तरमार्गेणैव व्रज अत्र तृतीयां विधाने प्रकृत्यादिभ्य उपसंख्यानात्तृतीया यथा कश्चि
दङ्गवल्लभापति; ऊत्र चित्तेनैकलेन गृहं विहृत्य क्षेत्रं शरीरे केदारे सिद्धस्थानकलत्रयोरिति विश्वः तांस्त
र्पयं गाभयान्नीचमार्गेण निर्गत्य पुनः सर्वाभ्यसमचरति तद्वदिति ध्वनिः ॥ १६ ॥ श्रीराम ॥ ९

त्वामिति आम्राश्चूताः कूटेषुशिखरेषुयस्यसआम्रकूटोनामसानुमान्पर्वतः आम्रश्चूतोरसालमरः कूटोस्त्रीशिखरंशृंगमि।
त्यमरः आसारोधारावृष्टिर्धारासंपात आसार इत्यमरस्तेनप्रशमितोवनोपप्लवोदावाग्निर्येनतंकृतोपकारमित्यर्थः अध्व
श्रमेणपरिगतंप्राप्तंत्वांसाधुसम्यग्मूर्ध्नावक्ष्यतिवोढावहेलृट् तथाहिक्षुद्रःकृपणोपिक्षुद्रोदरिद्रेकृपणेनृशंसइति

त्वामासारप्रशमितवनोपप्लवंसाधुमूर्ध्ना ।
वक्ष्यत्यध्वश्रमपरिगतंसानुमानाम्रकूटः
नक्षुद्रोपिप्रथमसुकृतापेक्षयासंश्रयाय
प्राप्तेमित्रेभवतिविमुखःकिंपुनर्यस्तथोच्चैः १७

याद्वः संश्रयायसंश्रयणायमित्रेसुहृदि अथमित्रंसखासुहृदित्यमरः प्राप्तेआगतेसतिप्रथमसुकृतापेक्षयापूर्वोपकारा
पेक्षयाविमुखोनभवतियस्तथातेनप्रकारेणोन्नतः सचाम्रकूटःअभिमुखोभवतीतिकिंवक्तव्यं एतेनप्रथमावसथेसौख्य
लाभात्तेकार्यसिद्धिरस्तीतिसूचितंतदुक्तंनिमित्तनिदानेप्रथमावसथेयस्यसौख्यंतस्याखिलेष्वपिशिवंभवतियत्रापरमन्यथा
त्वशुभंध्रुवमिति १७

छन्नेति हेमेघपरिणतैः परिपक्वैः फलैर्द्योततइतितथोक्तैः आषाढेवनचूताः फलंतिपच्यंतेचमेघवातेनेत्याशयः काननाम्
मे-टी. म्रैर्वनचूतैः छन्नोपान्तः आवृतपार्श्वः अचलश्चित्रकूटाख्यः स्निग्धवेणीसवर्णे मसृणकेशबंधच्छायेश्यामवर्णेत्व
१० यिः वेणीलकेशबंधेजलस्तुतोयादत्वः त्वयिशृंगेशिखरमारूढेसतियस्यच भावेनभावलक्षणमितिसप्तमी मा

छन्नोपान्तः परिणतफलद्योतिभिः काननाम्रैः
स्त्वय्यारूढेशिखरमचलः स्निग्धवेणीसवर्णे
नूनंयास्यत्यमरमिथुनप्रेक्षणीयामवस्था
मध्येश्यामःस्तनइवभुवः शेषविस्तारपांडुः १८

छन्नोपान्तः १८ ॥

ध्येश्यामोमध्यदन्यत्रशेषेविस्तारेपांडुः हरिणः हरिणः पांडुरः पांडुरित्यमरः भुवः स्तनइवामरमिथुनानांखे
चराणामितिभावः प्रेक्षणीयां दर्शनीयामवस्थान्नूनंयास्यतीति मिथुनग्रहणंकामिनामेवस्तनत्वेनोत्प्रेक्षासंभ
वतीतिकृतंयथापथिकांतः कश्चित्कामीकामिनीनांउच्चकलशेविश्रांतः सन्स्वपितिनदङ्गवानपिभुवोनापि
१०

स्थित्वेति हे मेघ वने चरंतीति वनेचराः तत्पुरुषे कृति बहुलमिति बहुलग्रहणादलुक् तेषां वधूभिर्भुक्ताः कुंजा लतागृहा यत्र त
स्मिन् निकुंजकुंजौ वा क्लीबे लतादिपिहितोदरे इत्यमरः तत्र तेन यन विनोदोऽस्तीत्यर्थः तस्मिन्नाम्रकूटे मुहूर्तमल्पकाल
मुहूर्तमल्पकाले स्याद्घटिकाद्वितयेपि चेति शाश्वतो वे स्थित्वा न तु चिरं कार्यविरोधादिति भावः विश्रमपतो याः सर्गेण त्वमा
सारत्यक्त्वा वर्षेण द्रुततरगतिर्लाघवाद्वेगवतीति द्रुततरगतिः सन् तस्मादाम्रकूटात् परं अनंतरं तत्परं वर्त्म मार्गं तीर्णः तिक्रां
तः उपलैः पाषाणैः विषमे विंध्यस्याद्रेः पादे विंध्यप्रत्यंतपर्वते पादाः प्रत्यंतपर्वताः इत्यमरः विशीर्णां समंततो विस्त

स्थित्वा तस्मिन्वनचरवधूभुक्तकुंजे मुहूर्तं तोयोत्सर्गात् द्रुततरगतिस्तत्परं वर्त्म तीर्णः
रेवां द्रक्ष्यस्युपलविषमे विंध्यपादे विशीर्णां भक्तिच्छेदैरिव विरचितां भूतिमंगे गजस्य
॥ १९ ॥

मरां एतेन कस्याश्चित्कामुक्याः प्रियतमवर्णीयातोपि ध्वन्यते रेवां नर्मदां रेवा तु नर्मदा सोमोद्भवा मेकलकन्यका इति
अमरः गजस्यांगे शरीरे भक्तयो रचनाः रेखा इति यावत् भक्तिर्निमित्ते णौ भागे रचनायामिति शाश्वतः तासां छेदैर्भंगि
भिः भाभिर्विरचितां भूतिं शृंगारमिव भासितमिव वा भूतिर्मातंगशृंगारे जातौ भस्मनि संपदीति विश्वः द्रक्ष्यसि अयमपि
महान्स्तेन यनकौतुकलाभ इति भावः ॥ १९ ॥

मे. टी.
११

तस्या इति हे मेघ वांतवृष्टिः कृतोर्णवर्षः सन् कृतवमनश्च व्यज्यते तिक्तैः सुगंधिभिः तिक्तरसवद्भिश्च तिक्तो रसः सुगंधे चेति।
विश्वः वनगजमदैर्वासितं सुरभितं भावितं च हिमवद्विंध्यमलयाः गजानां प्रभवाः इति विंध्यस्य गजप्रभवत्वादिति भावः जं
जैः प्रतिहतरयं प्रतिबद्धवेगं स्वादयेयमित्यर्थः तस्या रेवायाः तोयमादाय गच्छेः व्रज हे घन मेघ अंतः सारो बलेयस्य।

तस्यास्तिक्तैर्वनगजमदैर्वासितं वांतवृष्टि
र्जंबूकुंजप्रतिहतरयं तोयमादाय गच्छेः।
अंतःसारं घन तुलयितुं नानिलः शक्ष्यति त्वां
रिक्तः सर्वो भवति हि लघुः पूर्णता गौरवाय २०

त्वामनिलो वायुस्तुलयितुं न शक्ष्यति शक्तो न भविष्यति तथा रिक्तोऽंतःसारशून्यः सर्वोपि लघुर्लघुर्भवतीत्यर्थः
पूर्णता सारवत्ता गौरवाय अप्रकंप्यत्वाय भवतीत्यर्थः आदौ वमनं पश्चात्तस्य तु समः श्लेष्मशोषणाय लघुतिक्तकषाय
याद्युपानाहृत्य बलस्य वातप्रकंपो तस्मादिति २०

२२

नीपमितिसारंगामतंगजाःकुरंगावाभृंगावासारंगश्चातकेभृंगेकुरंगेचमतंगजेइतिविश्वः अर्द्धरूढैरेकेकशःमुकुलितैः केस
रैः किंजल्कैर्हरितंपलाशवर्णंपलाशोहरितोहरिदित्यमरः हरितंचतत्कपिशंच श्यावःस्यात्कपिशोधूम्रधूमलौकृ
ष्णलोहितावित्यमरः श्यामवर्णमितियावत् वर्णेनवर्णेनेतिसमासः नीपंस्थलकदंबकुसुमं स्थलकदंबकेनीप
इतिशाश्वतार्णवेदृष्ट्वासंप्रेक्ष्यविदित्वेतियावत् तथाकच्छस्यनूपस्यनुकच्छं अव्ययंविभक्त्यर्थेऽव्ययीभावः जलप्राय
मनूपंस्यात्पुंसिकच्छस्तथाविधइत्यमरः आविर्भूताःप्रथमाःप्रथमोत्पन्नाःमुकुलायासांताः कंदलीर्भूमिकंद

नीपंदृष्ट्वाहरितकपिशंकेसरैरर्द्धरूढैराविर्भूतप्रथममुकुलाःकंदलीश्चानुकच्छं दग्धार
ण्येष्वधिकसुरभिंगंधमाघ्रायचोर्व्याःसारंगास्तेजललवमुचःसूचयिष्यंतिमार्गं २१

लीः द्रोणीपर्णीःस्निग्धकंदाकंदलीभूमिकंदल्यपीतिशाश्वतार्णवे जग्ध्वाभक्षयित्वाअदोजग्धिरितिजग्ध्यादेशः अर
ण्येषुअधिकसुरभिमतिघ्राणतर्पणंदग्धारण्येष्वितिपाठेदग्धमित्याधिकविशेषणमर्थवशात्कंदलीश्चदृष्ट्वेत्य
न्वयोद्रष्टव्यः उर्व्याभूमेर्गंधिमाघ्रायजललवमुचोमेघस्यमार्गंसूचयिष्यंतिअनुमापयिष्यंति यत्रयत्रवृ
ष्टिकीर्यंनीपकुसुमादिकंदृश्यतेतत्रतत्रवयावृष्टिःकार्येतिअनुमीयतइत्यर्थः २१

अंभइतिप्रवृत्तिमपिव्याख्यायते अंभोविंदूनांवर्षोदविंदूनांग्रहणेसर्वसहापतितमंबुचातकस्याहितंभूस्पृष्टोदकस्य
मे॰टी॰ स्पृष्टेघांरोगहेतुत्वादंतरालेरावस्वीकरेचतुरांश्चातकान्वीक्षमाणाकौतुकात्पश्यंतः श्रेणीभूतावद्धपंक्तीः अभ्रा
२२

अंभोविंदुग्रहणरभसांश्चात
कान्वीक्षमाणाःश्रेणीभूतांपरिगणनयानि
र्दिशंतोवलाकाः त्वामासाद्य
स्तनितसमयेमानयिष्य
तिसिद्धासोत्कंठानिप्रिय
सहचरीसंभ्रमालिंगितानि
नि २२

ततद्भावेच्चिवलाकानकपंक्तीपरिगणनयराकाहेतिस्वइतिसंख्यानेननिर्दिशंतोहस्तेनालोपेतः सिद्धास्तनितसमये
तद्गर्जितकालेसोत्कंठानिमुत्कंठाएवंकाणिप्रियसहचरीसंभ्रमेणालिंगितानिआसाद्यस्वयंग्रहणात्स्वेषहस्वमतव भू
येत्यर्थः त्वांमानयिष्यंतित्वन्निमित्तत्वात्सुखलाभस्येतिभावः ॥ २२ ॥ २२